'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्' [५.८]—अर्थात् अज्ञः 'करोमि' इति, आरुरुक्षोः कर्म कारणम्, आरूढस्य योगस्थस्य शम एव कारणम् [६.३], 'उदाराः' त्रयोऽपि अज्ञाः—'ज्ञानी त्वात्मैव मे मतम्' [७.१८], 'अज्ञाः कर्मिणः गतागतं कामकामाः लभन्ते' [९.२१] 'अनन्याश्चिन्तयन्तो मां नित्ययुक्ताः यथोक्तम् आत्मानम् आकाशकल्पम् उपासते' [९.२२], 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' [१०.१०]—अर्थात् न कर्मिणः अज्ञाः उपयान्ति। भगवत्कर्मकारिणो ये युक्ततमाः अपि कर्मिणः अज्ञाः ते उत्तरोत्तरहीनफलत्यागावसानसाधनाः [१२.६–११]॥

अनिर्देश्याक्षरोपासकास्तु 'अद्वेष्टा सर्वभूतानाम्' [१२.१३-२०] इति आध्यायपरिसमाप्ति उक्तसाधनाः क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाश्च [१३.७-११, १४.२२-२६, १५.३-५]। अधिष्ठानादिपञ्चहेतुकसर्वकर्मसंन्यासिनां [१८.१४] आत्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्स्वरूपाणां अनिष्टादिकर्मफलत्रयं [१८.१२] परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकशरणानां न भवति, भवत्येव अन्येषां अज्ञानां कर्मिणां असंन्यासिनां—इत्येष गीताशास्त्रोक्तकर्तव्यार्थस्य विभागः॥

अविद्यापूर्वकत्वं सर्वस्य कर्मणः असिद्धमिति चेत्—

न, ब्रह्महत्यादिवत्। यद्यपि शास्त्रावगतं नित्यं कर्म, तथाऽपि अविद्यावत एव भवति। यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्म अनर्थकारणं अविद्याकामादिदोषवतः भवति—अन्यथा प्रवृत्त्यनुपपत्तेः—तथा नित्यनैमित्तिककाम्यान्यपीति॥

देहव्यतिरिक्तात्मनि अज्ञाते प्रवृत्तिः नित्यादिकर्मसु अनुपपन्ना इति चेत्—

न, चलनात्मकस्य कर्मणः अनात्मकर्तृकस्य 'अहं करोमि' इति प्रवृत्तिदर्शनात्॥

देहादिसङ्घाते अहंप्रत्ययः गौणः, न मिथ्या इति चेत्—

न, तत्कार्येष्वपि गौणत्वोपपत्तेः। आत्मीये देहादिसङ्घाते अहंप्रत्ययः गौणः, यथा आत्मीये पुत्रे 'आत्मा वै पुत्रनामाऽसि' [तै स २.११] इति, लोके च 'मम प्राणा एव अयं गौः' इति, तद्वत्। नैव मिथ्याप्रत्ययः। मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोः अगृह्यमाणविशेषयोः। न गौणप्रत्ययस्य

किं तर्हि?—मिथ्याप्रत्ययेनैव अनात्मनः सन्तः आत्मत्वं आपाद्यन्ते, तद्भावे भावात्, तदभावे च अभावात्। अविवेकिनां हि अज्ञानकाले बालानां दृश्यते 'दीर्घः अहं', 'गौरः अहं' इति देहादिसंघाते अहंप्रत्ययः। न तु विवेकिनां 'अन्यः अहं देहादिसंघातात्' इति जानतां तत्काले देहादिसंघाते अहंप्रत्ययः भवति। तस्मात् मिथ्याप्रत्ययाभावे अभावात् तत्कृत एव, न गौणः। पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोः अग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यात्, न अगृह्यमाणविशेषसामान्ययोः। यत्तु उक्तं 'श्रुतिप्रामाण्यात्' इति—तत् न, तत्प्रामाण्यस्य अदृष्टविषयत्वात्। प्रत्यक्षादिप्रमाणानुपलब्धे हि विषये अग्निहोत्रादिसाध्यसाधनसम्बन्धे श्रुतेः प्रामाण्यं, न प्रत्यक्षादिविषये, अदृष्टदर्शनार्थविषयत्वात् प्रामाण्यस्य। तस्मात् न दृष्टमिथ्याज्ञाननिमित्तस्य अहंप्रत्ययस्य देहादिसंघाते गौणत्वं कल्पयितुं शक्यम्। न हि श्रुतिशतमपि 'शीतः अग्निः, अप्रकाशो वा' इति ब्रुवत् प्रामाण्यं उपैति। यदि ब्रूयात् 'शीतः अग्निः, अप्रकाशो वा' इति, तथाऽपि अर्थान्तरं श्रुतेः विवक्षितं कल्प्यम्, प्रामाण्यान्यथाऽनुपपत्तेः, न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा कल्प्यम्॥

कर्मणः मिथ्याप्रत्ययवत्कर्तृकत्वात् कर्तुः अभावे श्रुतेः अप्रामाण्यमिति चेत्—

न, ब्रह्मविद्यायां अर्थवत्त्वोपपत्तेः॥

कर्मविधिश्रुतिवत् ब्रह्मविद्याविधिश्रुतेरपि अप्रामाण्यप्रसङ्ग इति चेत्—

न, बाधकप्रत्ययानुपपत्तेः। यथा ब्रह्मविद्याविधिश्रुत्या आत्मनि अवगते देहादिसंघाते अहंप्रत्ययः बाध्यते, तथा आत्मन्येव आत्मावगतिः न कदाचित् केनचित् कथंचिदपि बाधितुं शक्या, फलाव्यतिरेकात् अवगतेः यथा अग्निः उष्णः प्रकाशश्च इति। न च एवं कर्मविधिश्रुतेः अप्रामाण्यं, पूर्वपूर्वप्रवृत्तिनिरोधेन उत्तरोत्तरापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात्। मिथ्यात्वेऽपि उपायस्य उपेयसत्यतया सत्यत्वमेव स्यात्; यथा अर्थवादानां विधिशेषाणाम्, लोकेऽपि बालोन्मत्तादीनां पयआदौ पाययितव्ये चूडावर्धनादिवचनम्। प्रकारान्तरस्थानां च साक्षादेव वा प्रामाण्यं सिद्धं, प्राक् आत्मज्ञानात्

देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत् ॥

यत्तु मन्यसे—स्वयम् अव्याप्रियमाणोऽपि आत्मा सन्निधिमात्रेण करोति, तदेव मुख्यं कर्तृत्वम् आत्मनः, यथा राजा युध्यमानेषु योधेषु युध्यते इति प्रसिद्धं स्वयम् अयुध्यमानोऽपि सन्निधानादेव जितः पराजितश्चेति, तथा सेनापतिः वाचैव करोति, क्रियाफलसम्बन्धश्च राज्ञः सेनापतेश्च दृष्टः । यथा च ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्म आत्मकृतं स्यात्, फलस्य आत्मगामित्वात् । यथा वा भ्रामकस्य लोहभ्रामयितृत्वात् अव्यापृतस्यैव मुख्यमेव कर्तृत्वम्, तथा च आत्मनः इति ।

तत् असत्, अकुर्वतः कारकत्वप्रसङ्गात् ।

कारकम् अनेकप्रकारमिति चेत्—

न, राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् । राजा तावत् स्वव्यापारेणापि युध्यते, योधानां च योधयितृत्वे धनदाने च मुख्यमेव कर्तृत्वं, तथा जयपराजयफलोपभोगे । यजमानस्यापि प्रधानत्यागे दक्षिणादाने च मुख्यमेव कर्तृत्वम् । तस्मात् अव्यापृतस्य कर्तृत्वोपचारो यः सः गौणः इति अवगम्यते । यदि मुख्यम् अन्यत् कर्तृत्वं स्वव्यापारलक्षणं न उपलभ्येत राजयजमानप्रभृतीनां, तदा सन्निधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत, यथा भ्रामकस्य लोहभ्रमणेन, न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते । तस्मात् सन्निधिमात्रेण कर्तृत्वं गौणमेव । तथा च सति फलसम्बन्धोऽपि गौण एव स्यात् । न गौणेन मुख्यं कार्यं निर्वर्त्यते । तस्मात् असदेव एतत् गीयते 'देहादीनां व्यापारेण अव्यापृतः आत्मा कर्ता भोक्ता च स्यात्' इति । भ्रान्तिनिमित्तं तु सर्वम् उपपद्यते, यथा स्वप्ने, मायायां च एवम् । न च देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्या (–धाना–) दिषु कर्तृत्वभोक्तृत्वाद्यनर्थः उपलभ्यते । तस्मात् भ्रान्तिप्रत्ययनिमित्तः एव अयं संसारभ्रमः, न तु परमार्थः, इति सम्यग्दर्शनात् अत्यन्त एव उपरमः इति सिद्धम् ॥

सर्वं गीताशास्त्रार्थम् उपसंहृत्य अस्मिन् अध्याये, विशेषतश्च अन्ते इह शास्त्रार्थदार्ढ्याय संक्षेपतः उपसंहारं कृत्वा, अथ इदानीं शास्त्रसम्प्रदायविधिमाह—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

इदं इति ॥ इदं शास्त्रं ते तव हिताय मया उक्तं संसारविच्छित्तये अतपस्काय तपोरहिताय न वाच्यं इति व्यवहितेन सम्बध्यते। तपस्विनेऽपि अभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन कस्यांचिदपि अवस्थायां न वाच्यम्। भक्तः तपस्वी अपि सन् अशुश्रूषुः यो भवति तस्मै अपि न वाच्यम्। न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वा अभ्यसूयति आत्मप्रशंसादिदोषाध्यारोपणेन ईश्वरत्वं मम अजानन् न सहते, असावपि अयोग्यः, तस्मै अपि न वाच्यम्। भगवति अनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवे वाच्यं शास्त्रं इति सामर्थ्यात् गम्यते। तत्र 'मेधाविने तपस्विने वा' [?] इति अनयोः विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम्। शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम्। भगवति असूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम्। गुरुशुश्रूषाभक्तिमते च वाच्यं इत्येषः शास्त्रसंप्रदायविधिः ॥ ६७ ॥

सम्प्रदायस्य कर्तुः फलं इदानीं आह—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

य इमं इति ॥ यः इमं यथोक्तं परमं परमनिःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गोप्यतमं मद्भक्तेषु मयि भक्तिमत्सु अभिधास्यति वक्ष्यति, ग्रन्थतः अर्थतश्च स्थापयिष्यतीत्यर्थः, यथा त्वयि मया। भक्तेः पुनर्ग्रहणात् भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते। कथं अभिधास्यति इति? उच्यते—भक्तिं मयि परां कृत्वा 'भगवतः परमगुरोः अच्युतस्य शुश्रूषा मया क्रियते' इत्येवं कृत्वेत्यर्थः। तस्य इदं फलम्—मामेव एष्यति मुच्यते एव। असंशयः अत्र संशयः न कर्तव्यः ॥ ६८ ॥

किंच—

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

न च इति ॥ न च तस्मात् शास्त्रसंप्रदायकृतः मनुष्येषु मनुष्याणां मध्ये कश्चित् मे मम प्रियकृत्तमः अतिशयेन प्रियकरः, अन्यः

प्रियकृत्तमः, नास्त्येव इत्यर्थः वर्तमानेषु । न च भविता भविष्यत्यपि काले तस्मात् द्वितीयः अन्यः प्रियतरः प्रियकृत्तरः भुवि लोकेऽस्मिन् न भविता ॥ ६९ ॥

योऽपि—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

अध्येष्यते इति ॥ अध्येष्यते च पठिष्यति यः इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रन्थं आवयोः, तेन इदं कृतं स्यात् । ज्ञानयज्ञेन—विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञः मानसत्वात् विशिष्टतमः इत्यतः तेन ज्ञानयज्ञेन गीताशास्त्रस्य अध्ययनं स्तूयते, फलविधिरेव वा, देवतादिविषयज्ञानयज्ञफलतुल्यं अस्य फलं भवतीति—तेन अध्ययनेन अहं इष्टः पूजितः स्यां भवेयं इति मे मम मतिः निश्चयः ॥७०॥

अथ श्रोतुः इदं फलम्—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥

श्रद्धावान् इति ॥ श्रद्धावान् श्रद्दधानः अनसूयश्च असूयावर्जितः सन् इमं ग्रन्थं शृणुयादपि यो नरः—अपिशब्दात् किमुत अर्थज्ञानवान्? सोऽपि पापात् मुक्तः शुभान् प्रशस्तान् लोकान् प्राप्नुयात् पुण्यकर्मणां अग्निहोत्रादिकर्मवताम् ॥ ७१ ॥

शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति । तदग्रहणे ज्ञाते पुनः ग्राहयिष्यामि उपायान्तरेणापि इति प्रष्टुः अभिप्रायः । यत्नान्तरं च आस्थाय शिष्यस्य कृतार्थता कर्तव्या इति आचार्यधर्मः प्रदर्शितो भवति ।

कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय ॥ ७२ ॥

कच्चित् इति ॥ कच्चित् किं एतत् मया उक्तं श्रुतं श्रवणेन अवधारितं पार्थ? त्वया एकाग्रेण चेतसा चित्तेन? किं वा अप्रमादतः? कच्चित् अज्ञानसम्मोहः अज्ञाननिमित्तः सम्मोहः अविविक्तभावः [ विचित्तभाव ] अविवेकः स्वाभाविकः किं प्रणष्टः?—यदर्थः अयं शास्त्रश्रवणायासः तव, मम च उपदेष्टृत्वायासः प्रवृत्तः—ते तव

हे धनञ्जय ! ॥ ७२ ॥

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

नष्टः इति ॥ नष्टः मोहः अज्ञानजः समस्तसंसारानर्थहेतुः, सागर इव दुरुत्तरः । स्मृतिश्च आत्मतत्त्वविषया लब्धा—यस्याः लाभात् सर्वहृदयग्रन्थीनां विप्रमोक्षः—त्वत्प्रसादात् तव प्रसादात् मया त्वत्प्रसादम् आश्रितेन अच्युत । अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलं एतावदेवेति निश्चितं दर्शितं भवति, यतः ज्ञानात् मोहनाशः आत्मस्मृतिलाभश्चेति । तथा च श्रुतौ 'अनात्मवित् शोचामि' इति उपन्यस्य आत्मज्ञानेन सर्वग्रन्थीनां विप्रमोक्षः उक्तः— [छा. उ. ७. १. ३; २६. २ ]। 'भिद्यते हृदयग्रन्थिः' [ मुं. उ. २. २. ८. ], 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः [ ई. उ. ७. ] इति च मन्त्रवर्णः । अथ इदानीं त्वच्छासने स्थितः अस्मि गतसन्देहः मुक्तसंशयः । करिष्ये वचनं तव । अहं त्वत्प्रसादात् कृतार्थः, न मे कर्तव्यं अस्ति इत्यभिप्रायः ॥ ७३ ॥

परिसमाप्तः शास्त्रार्थः । अथ इदानीं कथासम्बन्धप्रदर्शनार्थं संजयः उवाच—

सञ्जय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

इत्यहं इति ॥ इति एवं अहं वासुदेवस्य पार्थस्य च महात्मनः संवादं इमं यथोक्तं अश्रौषं श्रुतवान् अस्मि अद्भुतं अत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥ ७४ ॥

न च इमम्—

व्यासप्रसादाच्छ्रुतवानिमं गुह्यतमं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

व्यास इति ॥ व्यासप्रसादात् ततः दिव्यचक्षुर्लाभात् श्रुतवान् इमं संवादं गुह्यतमं परं योगं—योगार्थत्वात् ग्रन्थोऽपि योगः—संवादं

इम योगमेव वा योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयं, न परम्परया ॥ ७५ ॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

राजन् इति ॥ हे राजन् धृतराष्ट्र ! संस्मृत्य संस्मृत्य प्रतिक्षणं संवादं इमं अद्भुतं केशवार्जुनयोः पुण्यं इमं श्रवणेनापि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥ ७७ ॥

तच्च इति ॥ तच्च संस्मृत्य संस्मृत्य रूपं अत्यद्भुतं हरेः विश्वरूपं विस्मयो मे महान् राजन् ! हृष्यामि च पुनः पुनः ॥ ७७ ॥

किं बहुना—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
मोक्षयोगो नाम अष्टादशोऽध्यायः ॥

यत्र इति ॥ यत्र यस्मिन् पक्षे योगेश्वरः सर्वयोगानां ईश्वरः— तत्प्रभवत्वात् सर्वयोगबीजस्य—कृष्णः, यत्र पार्थः यस्मिन् पक्षे धनुर्धरः गाण्डीवधन्वा, तत्र श्रीः तस्मिन् पाण्डवानां पक्षे श्रीः विजयः, तत्रैव भूतिः श्रियो विशेषः विस्तारः भूतिः ध्रुवा अव्यभिचारिणी नीतिः नयः, इत्येवं मतिः मम इति ॥ ७८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्य
श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये मोक्ष
संन्यासयोगो नाम अष्टादशोऽध्यायः ॥ १८ ॥

# श्रीमद्भगवद्गीताश्लोकाद्यचरणप्रतीक-वर्णानुक्रमः


| श्लोकप्रतीकानि | अ० | श्लो० | श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|---|---|---|
| अ. | | | अधिष्ठानं तथा कर्ता | १८ | १४ |
| अकीर्तिं चापि भूतानि | २ | ३४ | अध्यात्मज्ञाननित्यत्वम् | १३ | ११ |
| अक्षरं ब्रह्म परमम् | ८ | ३ | अध्येष्यते च य इमम् | १८ | ७० |
| अक्षराणामकारोऽस्मि | १० | ३३ | अनन्तविजयं राजा | १ | १६ |
| अग्निर्ज्योतिरहः शुक्लः | ८ | २४ | अनन्तश्चास्मि नागानाम् | १० | २९ |
| अच्छेद्योऽयमदाह्योऽयम् | २ | २४ | अनन्यचेताः सततम् | ८ | १४ |
| अजोऽपि सन्नव्ययात्मा | ४ | ६ | अनन्याश्चिन्तयन्तो माम् | ९ | २२ |
| अज्ञश्चाश्रद्दधानश्च | ४ | ४० | अनपेक्षः शुचिर्दक्षः | १२ | १६ |
| अत्र शूरा महेष्वासा | १ | ४ | अनादित्वान्निर्गुणत्वात् | १३ | ३१ |
| अथ केन प्रयुक्तोऽयम् | ३ | ३६ | अनादिमध्यान्तमनन्त० | ११ | १९ |
| अथ चित्तं समाधातुम् | १२ | ९ | अनाश्रितः कर्मफलम् | ६ | १ |
| अथ चेत्त्वमिमं धर्म्यम् | २ | ३३ | अनिष्टमिष्टं मिश्रं च | १८ | १२ |
| अथ चैनं नित्यजातम् | २ | २६ | अनुद्वेगकरं वाक्यम् | १७ | १५ |
| अथवा योगिनामेव | ६ | ४२ | अनुबन्धं क्षयं हिंसाम् | १८ | २५ |
| अथवा बहुनैतेन | १० | ४२ | अनेकचित्तविभ्रान्ताः | १६ | १६ |
| अथ व्यवस्थितान् दृष्ट्वा | १ | २० | अनेकबाहूदरवक्त्रनेत्रम् | ११ | १६ |
| अथैतदप्यशक्तोऽसि | १२ | ११ | अनेकवक्त्रनयनम् | ११ | १० |
| अदृष्टपूर्वं हृषितोऽस्मि | ११ | ४५ | अन्तकाले च मामेव | ८ | ५ |
| अदेशकाले यद्दानम् | १७ | २२ | अन्तवन्त इमे देहाः | २ | १८ |
| अद्वेष्टा सर्वभूतानाम् | १२ | १३ | अन्नाद्भवन्ति भूतानि | ३ | १४ |
| अधर्मं धर्ममिति या | १८ | ३२ | अन्ये च बहवः शूराः | १ | ९ |
| अधर्माभिभवात्कृष्ण | १ | ४१ | अन्ये त्वेवमजानन्तः | १३ | २५ |
| अधश्चोर्ध्वं प्रसृतास्तस्य | १५ | २ | अपरं भवतो जन्म | ४ | ४ |
| अधिभूतं क्षरो भावः | ८ | ४ | अपरे नियताहाराः | ४ | ३० |
| अधियज्ञः कथं कोऽत्र | ८ | २ | | | |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| अपरेयमितस्त्वन्याम् | ७ | ५ |
| अपर्याप्तं तदस्माकम् | १ | १० |
| अपाने जुह्वति प्राणम् | ४ | २९ |
| अपि चेत्सुदुराचारो | ९ | ३० |
| अपि चेदसि पापेभ्यः | ४ | ३६ |
| अप्रकाशोऽप्रवृत्तिश्च | १४ | १३ |
| अफलाकाङ्क्षिभिर्यज्ञो | १७ | ११ |
| अभयं सत्त्वसंशुद्धि | १६ | १ |
| अभिसंधाय तु फलम् | १७ | १२ |
| अभ्यासयोगयुक्तेन | ८ | ८ |
| अभ्यासेऽप्यसमर्थोऽसि | १२ | १० |
| अमानित्वमदम्भित्वम् | १३ | ७ |
| अमी च त्वां धृतराष्ट्रस्य | ११ | २६ |
| अमी हि त्वां सुरसंघा | ११ | २१ |
| अयनेषु च सर्वेषु | १ | ११ |
| अयतिः श्रद्धयोपेतो | ६ | ३७ |
| अयुक्तः प्राकृतः स्तब्धः | १८ | २८ |
| अवजानन्ति मां मूढा | ९ | ११ |
| अवाच्यवादांश्च बहून् | २ | ३६ |
| अविनाशि तु तद्विद्धि | २ | १७ |
| अविभक्तं च भूतेषु | १३ | १६ |
| अव्यक्तादीनि भूतानि | २ | २८ |
| अव्यक्ताद्व्यक्तयः सर्वाः | ८ | १८ |
| अव्यक्तोऽक्षर इत्युक्त | ८ | २१ |
| अव्यक्तोऽयमचिन्त्यो | २ | २५ |
| अव्यक्तं व्यक्तिमापन्नम् | ७ | २४ |
| अशास्त्रविहितं घोरम् | १७ | ५ |
| अशोच्यानन्वशोचस्त्वम् | २ | ११ |
| अश्रद्दधानाः पुरुषा | ९ | ३ |
| अश्रद्धया हुतं दत्तम् | १७ | २८ |
| अश्वत्थः सर्ववृक्षाणाम् | १० | २६ |
| असक्तबुद्धिः सर्वत्र | १८ | ४९ |
| असक्तिरनभिष्वङ्गः | १३ | ९ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| असत्यमप्रतिष्ठं ते | १६ | ८ |
| असौ मया हतः शत्रुः | १६ | १४ |
| असंयतात्मना योगो | ६ | ३६ |
| असंशयं महाबाहो | ६ | ३५ |
| अस्माकं तु विशिष्टा ये | १ | ७ |
| अहं क्रतुरहं यज्ञः | ९ | १६ |
| अहंकारं बलं दर्पम् | १६ | १८ |
| ,, ,, ,, | १८ | ५३ |
| अहमात्मा गुडाकेश | १० | २० |
| अहं वैश्वानरो भूत्वा | १५ | १४ |
| अहं सर्वस्य प्रभवो | १० | ८ |
| अहं हि सर्वयज्ञानाम् | ९ | २४ |
| अहिंसा सत्यमक्रोधः | १६ | २ |
| अहिंसा समता तुष्टिः | १० | ५ |
| अहो बत महत्पापम् | १ | ४५ |
| **आ** | | |
| आख्याहि मे को भवान् | ११ | ३१ |
| आचार्याः पितरः पुत्राः | १ | ३४ |
| आढ्योऽभिजनवानस्मि | १६ | १५ |
| आत्मसंभाविताः स्तब्धा | १६ | १७ |
| आत्मौपम्येन सर्वत्र | ६ | ३२ |
| आदित्यानामहं विष्णुः | १० | २१ |
| आपूर्यमाणमचल० | २ | ७० |
| आब्रह्मभुवनाल्लोकाः | ८ | १६ |
| आयुधानामहं वज्रम् | १० | २८ |
| आयुःसत्त्वबलारोग्य० | १७ | ८ |
| आरुरुक्षोर्मुनेर्योगम् | ६ | ३ |
| आवृतं ज्ञानमेतेन | ३ | ३९ |
| आशापाशशतैर्बद्धाः | १६ | १२ |
| आश्चर्यवत्पश्यति | २ | २९ |
| आसुरीं योनिमापन्ना | १६ | २० |
| आहारस्त्वपि सर्वस्य | १७ | ७ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| आहुस्त्वामृषयः सर्वे | १० | १३ |
| **इ** | | |
| इच्छाद्वेषसमुत्थेन | ७ | २७ |
| इच्छा द्वेषः सुखम् | १३ | ६ |
| इति गुह्यतमं शास्त्रम् | १५ | २० |
| इति ते ज्ञानमाख्यातम् | १८ | ६३ |
| इति क्षेत्रं तथा ज्ञानम् | १३ | १८ |
| इत्यर्जुनं वासुदेवः | ११ | ५० |
| इत्यहं वासुदेवस्य | १८ | ७४ |
| इदमद्य मया लब्धम् | १६ | १३ |
| इदं तु ते गुह्यतमम् | ९ | १ |
| इदं ते नातपस्काय | १८ | ६७ |
| इदं शरीरं कौन्तेय | १३ | १ |
| इदं ज्ञानमुपाश्रित्य | १४ | २ |
| इन्द्रियस्येन्द्रियस्यार्थे | ३ | ३४ |
| इन्द्रियाणां हि चरताम् | २ | ६७ |
| इन्द्रियाणि पराण्याहुः | ३ | ४२ |
| इन्द्रियाणि मनो बुद्धिः | ३ | ४० |
| इन्द्रियार्थेषु वैराग्यम् | १३ | ८ |
| इमं विवस्वते योगम् | ४ | १ |
| इष्टान् भोगान् हि | ३ | १२ |
| इहैकस्थं जगत्कृत्स्नम् | ११ | ७ |
| इहैव तैर्जितः सर्गः | ५ | १९ |
| **ई** | | |
| ईश्वरः सर्वभूतानाम् | १८ | ६१ |
| **उ** | | |
| उच्चैःश्रवसमश्वानाम् | १० | २७ |
| उत्क्रामन्तं स्थितं वाऽपि | १५ | १० |
| उत्तमः पुरुषस्त्वन्यः | १५ | १७ |
| उत्सन्नकुलधर्माणाम् | १ | ४४ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| उत्सीदेयुरिमे लोकाः | ३ | २४ |
| उदाराः सर्व एवैते | ७ | १८ |
| उदासीनवदासीनः | १४ | २३ |
| उद्धरेदात्मनाऽऽत्मानम् | ६ | ५ |
| उपद्रष्टाऽनुमन्ता च | १३ | २२ |
| **ऊ** | | |
| ऊर्ध्वं गच्छन्ति सत्त्व० | १४ | १८ |
| ऊर्ध्वमूलमधः शाखम् | १५ | १ |
| **ऋ** | | |
| ऋषिभिर्बहुधा गीतम् | १३ | ४ |
| **ए** | | |
| एतच्छ्रुत्वा वचनम् | ११ | ३५ |
| एतद्योनीनि भूतानि | ७ | ६ |
| एतन्मे संशयं कृष्ण | ६ | ३९ |
| एतान्न हन्तुमिच्छामि | १ | ३५ |
| एतान्यपि तु कर्माणि | १८ | ६ |
| एतां दृष्टिमवष्टभ्य | १६ | ९ |
| एतां विभूतिं योगं च | १० | ७ |
| एतैर्विमुक्तः कौन्तेय | १६ | २२ |
| एवमुक्तो हृषीकेशः | १ | २४ |
| एवमुक्त्वाऽर्जुनः संख्ये | १ | ४७ |
| एवमुक्त्वा ततो राजन् | ११ | ९ |
| एवमुक्त्वा हृषीकेशम् | २ | ९ |
| एवमेतद्यथाऽऽत्थ त्वम् | ११ | ३ |
| एवं परम्पराप्राप्तम् | ४ | २ |
| एवं प्रवर्तितं चक्रम् | ३ | १६ |
| एवं बहुविधा यज्ञाः | ४ | ३२ |
| एवं बुद्धेः परं बुद्ध्वा | ३ | ४३ |
| एवं सततयुक्ता ये | १२ | १ |
| एवं ज्ञात्वा कृतं कर्म | ४ | १५ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| एष तेऽभिहिता साङ्ख्ये | २ | ३९ |
| एषा ब्राह्मी स्थितिः पार्थ | २ | ७२ |
| **ओ** | | |
| ओमित्येकाक्षरं ब्रह्म | ८ | १३ |
| **ॐ** | | |
| ॐ तत्सदिति निर्देशो | १७ | २३ |
| **क.** | | |
| कच्चिन्नोभयविभ्रष्ट० | ६ | ३८ |
| कच्चिदेतच्छ्रुतं पार्थ | १८ | ७२ |
| कट्वम्ललवणात्युष्ण० | १७ | ९ |
| कथं न ज्ञेयमस्माभि | १ | ३९ |
| कथं भीष्ममहं सङ्ख्ये | २ | ४ |
| कथं विद्यामहं योगिन् | १० | १७ |
| कर्मजं बुद्धियुक्ता हि | २ | ५१ |
| कर्मणः सुकृतस्याऽऽहुः | १४ | १६ |
| कर्मणैव हि संसिद्धिम् | ३ | २० |
| कर्मणो ह्यपि बोद्धव्यम् | ४ | १७ |
| कर्मण्यकर्म यः पश्येत् | ४ | १८ |
| कर्मण्येवाधिकारस्ते | २ | ४७ |
| कर्म ब्रह्मोद्भवं विद्धि | ३ | १५ |
| कर्मेन्द्रियाणि संयम्य | ३ | ६ |
| कर्शयन्तः शरीरस्थम् | १७ | ६ |
| कविं पुराणमनुशा० | ८ | ९ |
| कस्माच्च ते न नमेरन् | ११ | ३७ |
| काङ्क्षन्तः कर्मणां सिद्धिम् | ४ | १२ |
| काम एष क्रोध एष | ३ | ३७ |
| कामक्रोधवियुक्तानाम् | ५ | २६ |
| काममाश्रित्य दुष्पूरम् | १६ | १० |
| कामात्मानः स्वर्गपरा | २ | ४३ |
| कामैस्तैस्तैर्हृतज्ञानाः | ७ | २० |
| काम्यानां कर्मणां | १८ | २ |
| कायेन मनसा बुद्ध्या | ५ | ११ |
| कार्पण्यदोषोपहत० | २ | ७ |
| कार्यकारणकर्तृत्वे | १३ | २० |
| कार्यमित्येव यत्कर्म | १८ | ९ |
| कालोऽस्मि लोकक्षय० | ११ | ३२ |
| काश्यश्च परमेष्वास | १ | १७ |
| किरीटिनं गदिनं चक्र० | ११ | ४६ |
| किरीटिनं गदिनं चक्रि० | ११ | १७ |
| किं कर्म किमकर्मेति | ४ | १६ |
| किं तद्ब्रह्म किमध्यात्मम् | ८ | १ |
| किं पुनर्ब्राह्मणाः पुण्या | ९ | ३३ |
| कुतस्त्वा कश्मलमिदम् | २ | २ |
| कुलक्षये प्रणश्यन्ति | १ | ४० |
| कृपया परयाऽऽविष्टो | १ | २८ |
| कृषिगौरक्ष्यवाणिज्यम् | १८ | ४४ |
| कैर्लिङ्गैस्त्रीन्गुणानेतान् | १४ | २१ |
| क्रोधाद्भवति संमोहः | २ | ६३ |
| क्लेशोऽधिकतरस्तेषाम् | १२ | ५ |
| क्लैब्यं मा स्म गमः पार्थ | २ | ३ |
| क्षिप्रं भवति धर्मात्मा | ९ | ३१ |
| क्षेत्रक्षेत्रज्ञयोरेवम् | १३ | ३४ |
| क्षेत्रज्ञं चापि मां विद्धि | १३ | [illegible] |
| **ग** | | |
| गतसङ्गस्य मुक्तस्य | ४ | २३ |
| गतिर्भर्ता प्रभुः साक्षी | ९ | १८ |
| गाण्डीवं स्रंसते हस्तात् | १ | ३० |
| गामाविश्य च भूतानि | १५ | १३ |
| गुणानेतानतीत्य त्रीन् | १४ | २० |
| गुरूनहत्वा हि महानु० | २ | ५ |
| **च.** | | |
| चञ्चलं हि मनः कृष्ण | ६ | ३४ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| चतुर्विधा भजन्ते माम् | ७ | १६ |
| चातुर्वर्ण्यं मया सृष्टम् | ४ | १३ |
| चिन्तामपरिमेयां च | १६ | ११ |
| चेतसा सर्वकर्माणि | १८ | ५७ |
| **ज.** | | |
| जन्म कर्म च मे दिव्यम् | ४ | २ |
| जरामरणमोक्षाय | ७ | २९ |
| जातस्य हि ध्रुवो मृत्युः | २ | २७ |
| जितात्मनः प्रशान्तस्य | ६ | ७ |
| ज्ञानयज्ञेन चाप्यन्ये | ९ | १५ |
| ज्ञानविज्ञानतृप्तात्मा | ६ | ८ |
| ज्ञानेन तु तदज्ञानम् | ५ | १६ |
| ज्ञानं कर्म च कर्ता च | १८ | १९ |
| ज्ञानं तेऽहं सविज्ञानम् | ७ | २ |
| ज्ञानं ज्ञेयं परिज्ञाता | १८ | १८ |
| ज्ञेयः स नित्यसंन्यासी | ५ | ३ |
| ज्ञेयं यत्तत्प्रवक्ष्यामि | १३ | १२ |
| ज्यायसी चेत्कर्मणस्ते | ३ | १ |
| ज्योतिषामपि तज्ज्यो० | १३ | १७ |
| **त.** | | |
| ततः पदं तत्परिमा० | १५ | ४ |
| तच्च संस्मृत्य संस्मृत्य | १८ | ७७ |
| ततः शङ्खाश्च भेर्यश्च | १ | १३ |
| ततः श्वेतैर्हयैर्युक्ते | १ | १४ |
| ततः स विस्मयाविष्टो | ११ | १४ |
| तत्त्ववित्तु महाबाहो | ३ | २८ |
| तत्र तं बुद्धिसंयोगम् | ६ | ४३ |
| तत्र सत्त्वं निर्मलत्वात् | १४ | ६ |
| तत्रापश्यत्स्थितान्पार्थः | १ | २६ |
| तत्रैकस्थं जगत्कृत्स्नम् | ११ | १३ |
| तत्रैकाग्रं मनः कृत्वा | ६ | १२ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| तत्रैवं सति कर्तारम् | १८ | १६ |
| तत्क्षेत्रं यच्च यादृक्च | १३ | ३ |
| तदित्यनभिसंधाय | १७ | २५ |
| तद्बुद्धयस्तदात्मानः | ५ | १७ |
| तद्विद्धि प्रणिपातेन | ४ | ३४ |
| तपस्विभ्योऽधिको योगी | ६ | ४६ |
| तपाम्यहमहं वर्षम् | ९ | १९ |
| तमस्त्वज्ञानजं विद्धि | १४ | ८ |
| तमुवाच हृषीकेशः | २ | १० |
| तमेव शरणं गच्छ | १८ | ६२ |
| तस्माच्छास्त्रं प्रमाणं ते | १६ | २४ |
| तस्मात्प्रणम्य प्रणिधाय | ११ | ४४ |
| तस्मात्त्वमिन्द्रियाण्यादौ | ३ | ४१ |
| तस्मात्त्वमुत्तिष्ठ यशो० | ११ | ३३ |
| तस्मात्सर्वेषु कालेषु | ८ | ७ |
| तस्मादसक्तः सततम् | ३ | १९ |
| तस्मादज्ञानसंभूतम् | ४ | ४२ |
| तस्मादोमित्युदाहृत्य | १७ | २४ |
| तस्माद्यस्य महाबाहो | २ | ६८ |
| तस्मान्नार्हा वयं हन्तुम् | १ | ३७ |
| तस्य संजनयन् हर्षम् | १ | १२ |
| तं विद्याद्दुःखसंयोगम् | ६ | २३ |
| तं तथा कृपयाऽऽविष्टम् | २ | १ |
| तानहं द्विषतः क्रूरान् | १६ | १९ |
| तानि सर्वाणि संयम्य | २ | ६१ |
| तुल्यनिन्दास्तुतिर्मौनी | १२ | १९ |
| तेजः क्षमा धृतिः शौ० | १६ | ३ |
| ते तं भुक्त्वा स्वर्गलोकम् | ९ | २१ |
| तेषामहं समुद्धर्ता | १२ | ७ |
| तेषामेवानुकम्पार्थम् | १० | ११ |
| तेषां सततयुक्तानाम् | १० | १० |
| तेषां ज्ञानी नित्ययुक्तः | ७ | १७ |
| त्यक्त्वा कर्मफलासङ्गम् | ४ | २० |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| एषा तेऽभिहिता सांख्ये | २ | ३९ |
| एषा ब्राह्मी स्थितिः पार्थ | २ | ७२ |
| **ओ.** | | |
| ओमित्येकाक्षरं ब्रह्म | ८ | १३ |
| **ॐ.** | | |
| ॐ तत्सदिति निर्देशो | १७ | २३ |
| **क.** | | |
| कच्चिन्नोभयविभ्रष्टः | ६ | ३८ |
| कच्चिदेतच्छ्रुतं पार्थ | १८ | ७२ |
| कट्वम्ललवणात्युष्ण० | १७ | ९ |
| कथं न ज्ञेयमस्माभिः | १ | ३९ |
| कथं भीष्ममहं संख्ये | २ | ४ |
| कथं विद्यामहं योगिन् | १० | १७ |
| कर्मजं बुद्धियुक्ता हि | २ | ५१ |
| कर्मणः सुकृतस्याऽऽहुः | १४ | १६ |
| कर्मणैव हि संसिद्धिम् | ३ | २० |
| कर्मणो ह्यपि बोद्धव्यम् | ४ | १७ |
| कर्मण्यकर्म यः पश्येत् | ४ | १८ |
| कर्मण्येवाधिकारस्ते | २ | ४७ |
| कर्म ब्रह्मोद्भवं विद्धि | ३ | १५ |
| कर्मेन्द्रियाणि संयम्य | ३ | ६ |
| कर्षयन्तः शरीरस्थम् | १७ | ६ |
| कविं पुराणमनुशा० | ८ | ९ |
| कस्माच्च ते न नमेरन् | ११ | ३७ |
| काङ्क्षन्तः कर्मणां सिद्धिम् | ४ | १२ |
| काम एष क्रोध एष | ३ | ३७ |
| कामक्रोधवियुक्तानाम् | ५ | २६ |
| काममाश्रित्य दुष्पूरम् | १६ | १० |
| कामात्मानः स्वर्गपराः | २ | ४३ |
| कामैस्तैस्तैर्हृतज्ञानाः | ७ | २० |
| काम्यानां कर्मणां | १८ | २ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| कायेन मनसा बुद्ध्या | ५ | ११ |
| कार्पण्यदोषोपहत० | २ | ७ |
| कार्यकारणकर्तृत्वे | १३ | २० |
| कार्यमित्येव यत्कर्म | १८ | ९ |
| कालोऽस्मि लोकक्षय० | ११ | ३२ |
| काश्यश्च परमेष्वासः | १ | १७ |
| किरीटिनं गदिनं चक्र० | ११ | ४६ |
| किरीटिनं गदिनं चक्रि० | ११ | १७ |
| किं कर्म किमकर्मेति | ४ | १६ |
| किं तद्ब्रह्म किमध्यात्मम् | ८ | १ |
| किं पुनर्ब्राह्मणाः पुण्याः | ९ | ३३ |
| कुतस्त्वा कश्मलमिदम् | २ | २ |
| कुलक्षये प्रणश्यन्ति | १ | ४० |
| कृपया परयाऽऽविष्टो | १ | २८ |
| कृषिगौरक्ष्यवाणिज्यम् | १८ | ४४ |
| कैर्लिङ्गैस्त्रीन्गुणानेतान् | १४ | २१ |
| क्रोधाद्भवति संमोहः | २ | ६३ |
| क्लेशोऽधिकतरस्तेषाम् | १२ | ५ |
| क्लैब्यं मा स्म गमः पार्थ | २ | ३ |
| क्षिप्रं भवति धर्मात्मा | ९ | ३१ |
| क्षेत्रक्षेत्रज्ञयोरेवम् | १३ | ३४ |
| क्षेत्रज्ञं चापि मां विद्धि | १३ | २ |
| **ग.** | | |
| गतसङ्गस्य मुक्तस्य | ४ | २३ |
| गतिर्भर्ता प्रभुः साक्षी | ९ | १८ |
| गाण्डीवं स्रंसते हस्तात् | १ | ३० |
| गामाविश्य च भूतानि | १५ | १३ |
| गुणानेतानतीत्य त्रीन् | १४ | २० |
| गुरूनहत्वा हि महानु० | २ | ५ |
| **च.** | | |
| चञ्चलं हि मनः कृष्ण | ६ | ३४ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| चतुर्विधा भजन्ते माम् | ७ | १६ |
| चातुर्वर्ण्यं मया सृष्टम् | ४ | १३ |
| चिन्तामपरिमेयां च | १६ | ११ |
| चेतसा सर्वकर्माणि | १८ | ५७ |
| **ज.** | | |
| जन्म कर्म च मे दिव्यम् | ४ | २ |
| जरामरणमोक्षाय | ७ | २९ |
| जातस्य हि ध्रुवो मृत्युः | २ | २७ |
| जितात्मनः प्रशान्तस्य | ६ | ७ |
| ज्ञानयज्ञेन चाप्यन्ये | ९ | १५ |
| ज्ञानविज्ञानतृप्तात्मा | ६ | ८ |
| ज्ञानेन तु तदज्ञानम् | ५ | १६ |
| ज्ञानं कर्म च कर्ता च | १८ | १९ |
| ज्ञानं तेऽहं सविज्ञानम् | ७ | २ |
| ज्ञानं ज्ञेयं परिज्ञाता | १८ | १८ |
| ज्ञेयः स नित्यसंन्यासी | ५ | ३ |
| ज्ञेयं यत्तत्प्रवक्ष्यामि | १३ | १२ |
| ज्यायसी चेत्कर्मणस्ते | ३ | १ |
| ज्योतिषामपि तज्ज्यो० | १३ | १७ |
| **त.** | | |
| ततः पदं तत्परिमा० | १५ | ४ |
| तच्च संस्मृत्य संस्मृत्य | १८ | ७७ |
| ततः शङ्खाश्च भेर्यश्च | १ | १३ |
| ततः श्वेतैर्हयैर्युक्ते | १ | १४ |
| ततः स विस्मयाविष्टो | ११ | १४ |
| तत्त्ववित्तु महाबाहो | ३ | २८ |
| तत्र तं बुद्धिसंयोगम् | ६ | ४३ |
| तत्र सत्त्वं निर्मलत्वात् | १४ | ६ |
| तत्रापश्यत्स्थितान्पार्थः | १ | २६ |
| तत्रैकस्थं जगत्कृत्स्नम् | ११ | १३ |
| तत्रैकाग्रं मनः कृत्वा | ६ | १२ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| तत्रैवं सति कर्तारम् | १८ | १६ |
| तत्क्षेत्रं यच्च यादृक्च | १३ | ३ |
| तदित्यनभिसंधाय | १७ | २५ |
| तद्बुद्धयस्तदात्मानः | ५ | १७ |
| तद्विद्धि प्रणिपातेन | ४ | ३४ |
| तपस्विभ्योऽधिको योगी | ६ | ४६ |
| तपाम्यहमहं वर्षम् | ९ | १९ |
| तमस्त्वज्ञानजं विद्धि | १४ | ८ |
| तमुवाच हृषीकेशः | २ | १० |
| तमेव शरणं गच्छ | १८ | ६२ |
| तस्माच्छास्त्रं प्रमाणं ते | १६ | २४ |
| तस्मात्प्रणम्य प्रणिधाय | ११ | ४४ |
| तस्मात्त्वमिन्द्रियाण्यादौ | ३ | ४१ |
| तस्मात्त्वमुत्तिष्ठ यशो० | ११ | ३३ |
| तस्मात्सर्वेषु कालेषु | ८ | ७ |
| तस्मादसक्तः सततम् | ३ | १९ |
| तस्मादज्ञानसंभूतम् | ४ | ४२ |
| तस्मादोमित्युदाहृत्य | १७ | २४ |
| तस्माद्यस्य महाबाहो | २ | ६८ |
| तस्मान्नार्हा वयं हन्तुम् | १ | ३७ |
| तस्य संजनयन् हर्षम् | १ | १२ |
| तं विद्याद्दुःखसंयोगम् | ६ | २३ |
| तं तथा कृपयाऽऽविष्टम् | २ | १ |
| तानहं द्विषतः क्रूरान् | १६ | १९ |
| तानि सर्वाणि संयम्य | २ | ६१ |
| तुल्यनिन्दास्तुतिर्मौनी | १२ | १९ |
| तेजः क्षमा धृतिः शौ० | १६ | ३ |
| ते तं भुक्त्वा स्वर्गलोकम् | ९ | २१ |
| तेषामहं समुद्धर्ता | १२ | ७ |
| तेषामेवानुकम्पार्थम् | १० | ११ |
| तेषां सततयुक्तानाम् | १० | १० |
| तेषां ज्ञानी नित्ययुक्तः | ७ | १७ |
| त्यक्त्वा कर्मफलासङ्गम् | ४ | २० |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| त्याज्यं दोषवदित्येके | १८ | ३ |
| त्रिभिर्गुणमयैर्भावै | ७ | १३ |
| त्रिविधा भवति श्रद्धा | १७ | २ |
| त्रिविधं नरकस्येदम् | १६ | २१ |
| त्रैगुण्यविषया वेदा | २ | ४५ |
| त्रैविद्या मां सोमपा | ९ | २० |
| त्वमक्षरं परमं वेदि० | ११ | १८ |
| त्वमादिदेवः पुरुष | ११ | ३८ |
| **द** | | |
| दण्डो दमयतामस्मि | १० | ३८ |
| दम्भो दर्पोऽभिमानश्च | १६ | ४ |
| दंष्ट्राकरालानि च ते | ११ | २५ |
| दातव्यमिति यद्दानम् | १७ | २० |
| दिवि सूर्यसहस्रस्य | ११ | १२ |
| दिव्यमाल्याम्बरधरम् | ११ | ११ |
| दुःखमित्येव यत्कर्म | १८ | ८ |
| दुःखेष्वनुद्विग्नमना | २ | ५६ |
| दूरेण ह्यवरं कर्म | २ | ४९ |
| दृष्ट्वा तु पाण्डवानीकम् | १ | २ |
| दृष्ट्वेदं मानुषं रूपम् | ११ | ५१ |
| देवद्विजगुरुप्राज्ञ | १७ | १४ |
| देवान् भावयतानेन | ३ | ११ |
| देही नित्यमवध्योऽयम् | २ | ३० |
| देहिनोऽस्मिन्यथा देहे | २ | १३ |
| दैवमेवापरे यज्ञम् | ४ | २५ |
| दैवी ह्येषा गुणमयी | ७ | १४ |
| दैवी संपद्विमोक्षाय | १६ | ५ |
| दोषैरेतैः कुलघ्नानाम् | १ | ४३ |
| द्यावापृथिव्योरिद० | ११ | २० |
| द्यूतं छलयतामस्मि | १० | ३६ |
| द्रव्ययज्ञास्तपोयज्ञा | ४ | २८ |
| द्रुपदो द्रौपदेयाश्च | १ | १८ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| द्रोणं च भीष्मं च | ११ | ३४ |
| द्वाविमौ पुरुषौ लोके | १५ | १६ |
| द्वौ भूतसर्गौ लोके | १६ | ६ |
| धर्मक्षेत्रे कुरुक्षेत्रे | १ | १ |
| धूमो रात्रिस्तथा कृष्ण | ८ | २५ |
| धूमेनाऽऽव्रियते वह्नि | ३ | ३८ |
| धृत्या यया धारयते | १८ | ३३ |
| धृष्टकेतुश्चेकितान | १ | ५ |
| ध्यानेनाऽऽत्मनि पश्य० | १३ | २४ |
| ध्यायतो विषयान् पुंस० | २ | ६२ |
| **न** | | |
| न कर्तृत्वं न कर्माणि | ५ | १४ |
| न कर्मणामनारम्भात् | ३ | ४ |
| न काङ्क्षे विजयं कृष्ण | १ | ३२ |
| न च तस्मान्मनुष्येषु | १८ | ६९ |
| न च मत्स्थानि भूतानि | ९ | ५ |
| न च मां तानि कर्माणि | ९ | ९ |
| न चैतद्विद्मः कतरन्नो | २ | ६ |
| न जायते म्रियते वा | २ | २० |
| न तदस्ति पृथिव्यां वा | १८ | ४० |
| न तद्भासयते सूर्यो | १५ | ६ |
| न तु मां शक्यसे द्रष्टुम् | ११ | ८ |
| न त्वेवाहं जातु नाऽऽसम् | २ | १२ |
| न द्वेष्ट्यकुशलं कर्म | १८ | १० |
| न प्रहृष्येत्प्रियं प्राप्य | ५ | २० |
| न बुद्धिभेदं जनयेत् | ३ | २६ |
| नभःस्पृशं दीप्तमने० | ११ | २४ |
| नमः पुरस्तादथ पृष्ठ० | ११ | ४० |
| न मां कर्माणि लिम्पन्ति | ४ | १४ |
| न मां दुष्कृतिनो मूढा | ७ | १५ |
| न मे पार्थास्ति कर्त० | ३ | २२ |
| न मे विदुः सुरगणा | १० | २ |

| श्लोकप्रतीकानि | अ० | श्लो० |
| --- | --- | --- |
| न रूपमस्येह तथो० | १५ | ३ |
| न वेदयज्ञाध्ययनै | ११ | ४८ |
| नष्टो मोहः स्मृतिर्लब्धा | १८ | ७३ |
| नहि कश्चित्क्षणमपि | ३ | ५ |
| न हि देहभृता शक्यम् | १८ | ११ |
| न हि प्रपश्यामि ममा० | २ | ८ |
| न हि ज्ञानेन सदृशम् | ४ | ३८ |
| नात्यश्नतस्तु योगोऽस्ति | ६ | १६ |
| नाऽऽदत्ते कस्यचित्पापम् | ५ | १५ |
| नान्तोऽस्ति मम दि० | १० | ४० |
| नान्यं गुणेभ्यः कर्तारम् | १४ | १९ |
| नासतो विद्यते भावः | २ | १६ |
| नास्ति बुद्धिरयुक्तस्य | २ | ६६ |
| नाहं प्रकाशः सर्वस्य | ७ | २५ |
| नाहं वेदैर्न तपसा | ११ | ५३ |
| निमित्तानि च पश्यामि | १ | ३१ |
| नियतस्य तु संन्यासः | १८ | ७ |
| नियतं कुरु कर्म त्वम् | ३ | ८ |
| नियतं सङ्गरहितम् | १८ | २३ |
| निराशीर्यतचित्तात्मा | ४ | २१ |
| निर्मानमोहा जितसङ्ग० | १५ | ५ |
| निश्चयं शृणु मे तत्र | १८ | ४ |
| निहत्य धार्तराष्ट्रान् | १ | ३६ |
| नेहाभिक्रमनाशोऽस्ति | २ | ४० |
| नैते सृती पार्थ जानन् | ८ | २७ |
| नैनं छिन्दन्ति शस्त्राणि | २ | २३ |
| नैव किंचित्करोमीति | ५ | ८ |
| नैव तस्य कृतेनार्थो | ३ | १८ |
| **प** | | |
| पञ्चैतानि महाबाहो | १८ | १३ |
| पत्रं पुष्पं फलं तोयम् | ९ | २६ |
| परस्तस्मात्तु भावोऽन्यो | ८ | २० |

| श्लोकप्रतीकानि | अ० | श्लो० |
| --- | --- | --- |
| परं ब्रह्म परं धाम | १० | १२ |
| परं भूयः प्रवक्ष्यामि | १४ | १ |
| परित्राणाय साधूनाम् | ४ | ८ |
| पवनः पवतामस्मि | १० | ३१ |
| पश्य मे पार्थ रूपाणि | ११ | ५ |
| पश्याऽऽदित्यान् वसू० | ११ | ६ |
| पश्यामि देवांस्तव देव | ११ | १५ |
| पश्यैतां पाण्डुपुत्राणाम् | १ | ३ |
| पाञ्चजन्यं हृषीकेशो | १ | १५ |
| पार्थ नैवेह नामुत्र | ६ | ४० |
| पिताऽसि लोकस्य | ११ | ४३ |
| पिताऽहमस्य जगतो | ९ | १७ |
| पुण्यो गन्धः पृथिव्यां च | ७ | ९ |
| पुरुषः प्रकृतिस्थो हि | १३ | २१ |
| पुरुषः स परः पार्थ | ८ | २२ |
| पुरोधसां च मुख्यं मां | १० | २४ |
| पूर्वाभ्यासेन तेनैव | ६ | ४४ |
| पृथक्त्वेन तु यज्ज्ञानम् | १८ | २१ |
| प्रकाशं च प्रवृत्तिं च | १४ | २२ |
| प्रकृतिं स्वामवष्टभ्य | ९ | ८ |
| प्रकृतिं पुरुषं चैव विद्ध्यना० | १३ | १९ |
| प्रकृतेः क्रियमाणानि | ३ | २७ |
| प्रकृतेर्गुणसंमूढाः | ३ | २९ |
| प्रकृत्यैव च कर्माणि | १३ | २९ |
| प्रजहाति यदा कामान् | २ | ५५ |
| प्रयत्नाद्यतमानस्तु | ६ | ४५ |
| प्रयाणकाले मनसा | ८ | १० |
| प्रलपन्विसृजन्गृह्णन् | ५ | ९ |
| प्रवृत्तिं च निवृत्तिं च | १६ | ७ |
| ,, ,, ,, ,, | १८ | ३० |
| प्रशान्तमनसं ह्येनम् | ६ | २७ |
| प्रशान्तात्मा विगतभीः | ६ | १४ |
| प्रसादे सर्वदुःखानाम् | २ | ६५ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| प्रह्लादश्चास्मि दैत्या० | १० | ३० |
| प्राप्य पुण्यकृतां लो० | ६ | ४१ |
| **ब** | | |
| बन्धुरात्माऽऽत्मनस्तस्य | ६ | ६ |
| बलं बलवतां चाहम् | ७ | ११ |
| बहिरन्तश्च भूतानाम् | १३ | १५ |
| बहूनां जन्मनामन्ते | ७ | १९ |
| बहूनि मे व्यतीतानि | ४ | ५ |
| बाह्यस्पर्शेष्वसक्तात्मा | ५ | २१ |
| बीजं मां सर्वभूतानां | ७ | १० |
| बुद्धियुक्तो जहातीह | २ | ५० |
| बुद्धिर्ज्ञानमसंमोहः | १० | ४ |
| बुद्धेर्भेदं धृतेश्चैव | १८ | २९ |
| बुद्ध्या विशुद्धया युक्तो | १८ | ५१ |
| बृहत्साम तथा साम्नाम् | १० | ३५ |
| ब्रह्मणो हि प्रतिष्ठाऽहम् | १४ | २७ |
| ब्रह्मण्याधाय कर्माणि | ५ | १० |
| ब्रह्मभूतः प्रसन्नात्मा | १८ | ५४ |
| ब्रह्मार्पणं ब्रह्म हविः | ४ | २४ |
| ब्राह्मणक्षत्रियविशाम् | १८ | ४१ |
| **भ** | | |
| भक्त्या त्वनन्यया शक्य० | ११ | ५४ |
| भक्त्या मामभिजानाति | १८ | ५५ |
| भयाद्रणादुपरतम् | २ | ३५ |
| भवान्भीष्मश्च कर्णश्च | १ | ८ |
| भवाप्ययौ हि भूतानाम् | ११ | २ |
| भीष्मद्रोणप्रमुखतः | १ | २५ |
| भूतग्रामः स एवायम् | ८ | १९ |
| भूमिरापोऽनलो वायुः | ७ | ४ |
| भूय एव महाबाहो | १० | १ |
| भोक्तारं यज्ञतपसाम् | ५ | २९ |
| भोगैश्वर्यप्रसक्तानाम् | २ | ४४ |
| **म** | | |
| मच्चित्तः सर्वदुर्गाणि | १८ | ५८ |
| मच्चित्ता मद्गतप्राणाः | १० | ९ |
| मत्कर्मकृन्मत्परमो | ११ | ५५ |
| मत्तः परतरं नान्यत् | ७ | ७ |
| मदनुग्रहाय परमम् | ११ | १ |
| मनःप्रसादः सौम्यत्वम् | १७ | १६ |
| मनुष्याणां सहस्रेषु | ७ | ३ |
| मन्मना भव मद्भक्तो | ९ | ३४ |
| ,, ,, ,, | १८ | ६५ |
| मन्यसे यदि तच्छक्यम् | ११ | ४ |
| मम योनिर्महद्ब्रह्म | १४ | ३ |
| ममैवांशो जीवलोके | १५ | ७ |
| मया ततमिदं सर्वम् | ९ | ४ |
| मयाऽध्यक्षेण प्रकृतिः | ९ | १० |
| मया प्रसन्नेन तवा० | ११ | ४७ |
| मयि चानन्ययोगेन | १३ | १० |
| मयि सर्वाणि कर्माणि | ३ | ३० |
| मय्यावेश्य मनो ये माम् | १२ | २ |
| मय्यासक्तमनाः पार्थ | ७ | १ |
| मय्येव मन आधत्स्व | १२ | ८ |
| महर्षयः सप्त पूर्वे | १० | ६ |
| महर्षीणां भृगुरहम् | १० | २५ |
| महात्मानस्तु मां पार्थ | ९ | १३ |
| महाभूतान्यहंकारो | १३ | ५ |
| मा ते व्यथा मा च | ११ | ४९ |
| मात्रास्पर्शास्तु कौन्तेय | २ | १४ |
| मानापमानयोस्तुल्य | १४ | २५ |
| मामुपेत्य पुनर्जन्म | ८ | १५ |
| मां च योऽव्यभिचारेण | १४ | २६ |
| मा हि पार्थ व्यपाश्रित्य | ९ | ३२ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| मुक्तसङ्गोऽनहंवादी | १८ | २६ |
| मूढग्राहेणाऽऽत्मनो यत् | १७ | १९ |
| मृत्युः सर्वहरश्चाहम् | १० | ३४ |
| मोघाशा मोघकर्माणो | ९ | १२ |

**य**

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| य इदं परमं गुह्यम् | १८ | ६८ |
| य एनं वेत्ति हन्तारम् | २ | १९ |
| य एवं वेत्ति पुरुषम् | १३ | २३ |
| यच्चापि सर्वभूतानाम् | १० | ३९ |
| यच्चावहासार्थमस० | ११ | ४२ |
| यजन्ते सात्त्विका देवा० | १७ | ४ |
| यज्ञो दानं तपः कर्म | १८ | ५ |
| यज्ञशिष्टामृतभुजो | ४ | ३१ |
| यज्ञशिष्टाशिनः सन्तो | ३ | १३ |
| यज्ञार्थात्कर्मणोऽन्यत्र | ३ | ९ |
| यज्ञे तपसि दाने च | १७ | २७ |
| यज्ज्ञात्वा न पुनर्मोहम् | ४ | ३५ |
| यततो ह्यपि कौन्तेय | २ | ६० |
| यतन्तो योगिनश्चैनम् | १५ | ११ |
| यतः प्रवृत्तिर्भूतानाम् | १८ | ४६ |
| यतेन्द्रियमनोबुद्धि० | ५ | २८ |
| यतो यतो निश्चरति | ६ | २६ |
| यत्करोषि यदश्नासि | ९ | २७ |
| यत्तदग्रे विषमिव | १८ | ३७ |
| यत्तु कामेप्सुना कर्म | १८ | २४ |
| यत्तु कृत्स्नवदेकस्मिन् | १८ | २२ |
| यत्तु प्रत्युपकारार्थम् | १७ | २१ |
| यत्र काले त्वनावृत्तिम् | ८ | २३ |
| यत्र योगेश्वरः कृष्णो | १८ | ७८ |
| यत्रोपरमते चित्तम् | ६ | २० |
| यत्सांख्यैः प्राप्यते | ५ | ५ |
| यथाऽऽकाशस्थितो नित्यम् | ९ | ६ |
| यथा दीपो निवातस्थो | ६ | १९ |
| यथा नदीनां बहवो | ११ | २८ |
| यथा प्रकाशयत्येकः | १३ | ३३ |
| यथा प्रदीप्तं ज्वलनम् | ११ | २९ |
| यथा सर्वगतं सौक्ष्म्यात् | १३ | ३२ |
| यथैधांसि समिद्धोऽग्निः | ४ | ३७ |
| यदग्रे चानुबन्धे च | १८ | ३९ |
| यदहंकारमाश्रित्य | १८ | ५९ |
| यदक्षरं वेदविदो | ८ | ११ |
| यदा ते मोहकलिलम् | २ | ५२ |
| यदादित्यगतं तेजो | १५ | १२ |
| यदा भूतपृथग्भावम् | १३ | ३० |
| यदा यदा हि धर्मस्य | ४ | ७ |
| यदा विनियतं चित्तम् | ६ | १८ |
| यदा सत्त्वे प्रवृद्धे तु | १४ | १४ |
| यदा संहरते चायम् | २ | ५८ |
| यदा हि नेन्द्रियार्थेषु | ६ | ४ |
| यदि मामप्रतीकारम् | १ | ४६ |
| यदि ह्यहं न वर्तेयं | ३ | २३ |
| यदृच्छया चोपपन्नम् | २ | ३२ |
| यदृच्छालाभसंतुष्टो | ४ | २२ |
| यद्यदाचरति श्रेष्ठ | ३ | २१ |
| यद्यद्विभूतिमत्सत्त्वम् | १० | ४१ |
| यद्यप्येते न पश्यन्ति | १ | ३८ |
| यया तु धर्मकामार्थान् | १८ | ३४ |
| यया धर्ममधर्मं च | १८ | ३१ |
| यया स्वप्नं भयं शोकम् | १८ | ३५ |
| यस्त्विन्द्रियाणि मनसा | ३ | ७ |
| यस्मात्क्षरमतीतोऽहम् | १५ | १८ |
| यस्मान्नोद्विजते लोको | १२ | १५ |
| यस्य नाहंकृतो भावो | १८ | १७ |
| यस्य सर्वे समारम्भाः | ४ | १९ |
| यं यं वाऽपि स्मरन्भावम् | ८ | ६ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| य लब्ध्वा चापरं लाभम् | ६ | २२ |
| य संन्यासमिति प्राहु॰ | ६ | २ |
| यं हि न व्यथयन्त्येते | २ | १५ |
| यः शास्त्रविधिमुत्सृज्य | १६ | २३ |
| यः सर्वत्रानभिस्नेह | २ | ५७ |
| यातयामं गतरसम् | १७ | १० |
| या निशा सर्वभूतानाम् | २ | ६९ |
| यान्ति देवव्रता देवान् | ९ | २५ |
| यामिमां पुष्पितां वाचम् | २ | ४२ |
| यावत्संजायते किंचित् | १३ | २६ |
| यावदेतान्निरीक्षेऽहम् | १ | २२ |
| यावानर्थ उदपाने | २ | ४६ |
| युक्तः कर्मफलं त्यक्त्वा | ५ | १२ |
| युक्ताहारविहारस्य | ६ | १७ |
| युञ्जन्नेवं सदाऽऽत्मानम् | ६ | १५ |
| ,, ,, | ६ | २८ |
| युधामन्युश्च विक्रान्त | १ | ६ |
| ये चैव सात्त्विका भावा | ७ | १२ |
| ये तु धर्म्यामृतमिदम् | १२ | २० |
| ये तु सर्वाणि कर्माणि | १२ | ६ |
| ये त्वक्षरमनिर्देश्यम् | १२ | ३ |
| ये त्वेतदभ्यसूयन्तो | ३ | ३२ |
| येऽप्यन्यदेवताभक्ता | ९ | २३ |
| ये मे मतमिदं नित्यम् | ३ | ३१ |
| ये यथा मां प्रपद्यन्ते | ४ | ११ |
| ये शास्त्रविधिमुत्सृज्य | १७ | १ |
| येषामर्थे काङ्क्षितं नो | १ | ३३ |
| येषां त्वन्तगतं पापम् | ७ | २८ |
| ये हि संस्पर्शजा भोगा | ५ | २२ |
| योगयुक्तो विशुद्धात्मा | ५ | ७ |
| योगसंन्यस्तकर्माणम् | ४ | ४१ |
| योगस्थः कुरु कर्माणि | २ | ४८ |
| योगिनामपि सर्वेषाम् | ६ | ४७ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| योगी युञ्जीत सततम् | ६ | १० |
| योत्स्यमानानवेक्षेऽहम् | १ | २३ |
| यो न हृष्यति न द्वेष्टि | १२ | १७ |
| योऽन्तःसुखोऽन्तराराम | ५ | २४ |
| यो मामजमनादिं च | १० | ३ |
| यो मामेवमसंमूढो | १५ | १९ |
| यो मां पश्यति सर्वत्र | ६ | ३० |
| यो यो यां यां तनुं भक्त | ७ | २१ |
| योऽयं योगस्त्वया प्रोक्त | ६ | ३३ |

र

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| रजस्तमश्चाभिभूय | १४ | १० |
| रजसि प्रलयं गत्वा | १४ | १५ |
| रजो रागात्मकं विद्धि | १४ | ७ |
| रसोऽहमप्सु कौन्तेय | ७ | ८ |
| रागद्वेषवियुक्तैस्तु | २ | ६४ |
| रागी कर्मफलप्रेप्सु | १८ | २७ |
| राजन् संस्मृत्य संस्मृत्य | १८ | ७६ |
| राजविद्या राजगुह्यम् | ९ | २ |
| रुद्राणां शंकरश्चास्मि | १० | २३ |
| रुद्रादित्या वसवो ये च | ११ | २२ |
| रूपं महत्ते बहुवक्त्र॰ | ११ | २३ |

ल

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| लभन्ते ब्रह्मनिर्वाणम् | ५ | २५ |
| लेलिह्यसे ग्रसमान | ११ | ३० |
| लोकेऽस्मिन् द्विविधा | ३ | ३ |
| लोभः प्रवृत्तिरारम्भ | १४ | १२ |

व

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| वक्तुमर्हस्यशेषेण | १० | १६ |
| वक्त्राणि ते त्वरमाणा | ११ | २७ |
| वायुर्यमोऽग्निर्वरुण | ११ | ३९ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| वासांसि जीर्णानि यथा | २ | २२ |
| विद्याविनयसम्पन्ने | ५ | १८ |
| विधिहीनमसृष्टान्नम् | १७ | १३ |
| विविक्तसेवी लघ्वाशी | १८ | ५२ |
| विषया विनिवर्तन्ते | २ | ५९ |
| विषयेन्द्रियसंयोगात् | १८ | ३८ |
| विस्तरेणाऽऽत्मनो योगम् | १० | १८ |
| विहाय कामान् यः | २ | ७१ |
| वीतरागभयक्रोधाः | ४ | १० |
| वृष्णीनां वासुदेवोऽस्मि | १० | ३७ |
| वेदानां सामवेदोऽस्मि | १० | २२ |
| वेदाविनाशिनं नित्यम् | २ | २१ |
| वेदाहं समतीतानि | ७ | २६ |
| वेदेषु यज्ञेषु तपःसु | ८ | २८ |
| व्यवसायात्मिका बुद्धिः | २ | ४१ |
| व्यामिश्रेणेव वाक्येन | ३ | २ |
| व्यासप्रसादाच्छ्रुतवान् | १८ | ७५ |
| **श** | | |
| शक्नोतीहैव यः सोढुम् | ५ | २३ |
| शनैः शनैरुपरमेत् | ६ | २५ |
| शमो दमस्तपः शौचम् | १८ | ४२ |
| शरीरं यदवाप्नोति | १५ | ८ |
| शरीरवाङ्मनोभिर्यत् | १८ | १५ |
| शुक्लकृष्णे गती ह्येते | ८ | २६ |
| शुचौ देशे प्रतिष्ठाप्य | ६ | ११ |
| शुभाशुभफलैरेवम् | ९ | २८ |
| शौर्यं तेजो धृतिर्दाक्ष्यम् | १८ | ४३ |
| श्रद्धया परया तप्तम् | १७ | १७ |
| श्रद्धावाननसूयश्च | १८ | ७१ |
| श्रद्धावाँल्लभते ज्ञानम् | ४ | ३९ |
| श्रुतिविप्रतिपन्ना ते | २ | ५३ |
| श्रेयान् द्रव्यमयाद्यज्ञात् | ४ | ३३ |
| श्रेयान् स्वधर्मो विगुणः | ३ | ३५ |
| ,, ,, | १८ | ४७ |
| श्रेयो हि ज्ञानमभ्यासा० | १२ | १२ |
| श्रोत्रादीनीन्द्रियाण्यन्ये | ४ | २६ |
| श्रोत्रं चक्षुः स्पर्शनं च | १५ | ९ |
| श्वशुरान् सुहृदश्चैव | ४ | २७ |
| **स.** | | |
| स एवायं मया तेऽद्य | ४ | ३ |
| सक्ताः कर्मण्यविद्वांसः | ३ | २५ |
| सखेति मत्वा प्रसभम् | ११ | ४१ |
| स घोषो धार्तराष्ट्राणाम् | १ | १९ |
| सततं कीर्तयन्तो माम् | ९ | १४ |
| स तया श्रद्धया युक्तः | ७ | २२ |
| सत्कारमानपूजार्थम् | १७ | १८ |
| सत्त्वं रजस्तम इति | १४ | ५ |
| सत्त्वं सुखे सञ्जयति | १४ | ९ |
| सत्त्वात्संजायते ज्ञानम् | १४ | १७ |
| सत्त्वानुरूपा सर्वस्य | १७ | ३ |
| सदृशं चेष्टते स्वस्याः | ३ | ३३ |
| सद्भावे साधुभावे च | १७ | २६ |
| समदुःखसुखः स्वस्थः | १४ | २४ |
| समं कायशिरोग्रीवम् | ६ | १३ |
| समं पश्यन्हि सर्वत्र | १३ | २८ |
| समं सर्वेषु भूतेषु | १३ | २७ |
| समः शत्रौ च मित्रे च | १२ | १८ |
| समोऽहं सर्वभूतेषु | ९ | २९ |
| सर्गाणामादिरन्तश्च | १० | ३२ |
| सर्वकर्माणि मनसा | ५ | १३ |
| सर्वकर्माण्यपि सदा | १८ | ५६ |
| सर्वगुह्यतमं भूयः | १८ | ६४ |
| सर्वतः पाणिपादं तत् | १३ | १३ |
| सर्वद्वाराणि संयम्य | ८ | १२ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| सर्वद्वारेषु देहेऽस्मिन् | १४ | ११ |
| सर्वधर्मान् परित्यज्य | १८ | ६६ |
| सर्वभूतस्थमात्मानम् | ६ | २९ |
| सर्वभूतस्थितं यो माम् | ६ | ३१ |
| सर्वभूतानि कौन्तेय | ९ | ७ |
| सर्वभूतेषु येनैकम् | १८ | २० |
| सर्वमेतदृतं मन्ये | १० | १४ |
| सर्वयोनिषु कौन्तेय | १४ | ४ |
| सर्वस्य चाहं हृदि | १५ | १५ |
| सर्वाणीन्द्रियकर्माणि | ४ | २७ |
| सर्वेन्द्रियगुणाभासम् | १३ | १४ |
| सहजं कर्म कौन्तेय | १८ | ४८ |
| सहयज्ञाः प्रजाः सृष्ट्वा | ३ | १० |
| सहस्रयुगपर्यन्तम् | ८ | १७ |
| संकरो नरकायैव | १ | ४२ |
| संकल्पप्रभवान् कामान् | ६ | २४ |
| संतुष्टः सततं योगी | १२ | १४ |
| संनियम्येन्द्रियग्रामम् | १२ | ४ |
| संन्यासस्तु महाबाहो | ५ | ६ |
| संन्यासस्य महाबाहो | १८ | १ |
| संन्यासः कर्मयोगश्च | ५ | २ |

| श्लोकप्रतीकानि | अ० | श्लो० |
|---|---|---|
| साधिभूताधिदैवं माम् | ७ | ३० |
| सांख्ययोगौ पृथग्बालाः | ५ | ४ |
| सिद्धिं प्राप्तो यथा | १८ | ५० |
| सीदन्ति मम गात्राणि | १ | २९ |
| सुखदुःखे समे कृत्वा | २ | ३८ |
| सुखमात्यन्तिकं यत्तत् | ६ | २१ |
| सुखं त्विदानीं त्रिविधम् | १८ | ३६ |
| सुदुर्दर्शमिदं रूपम् | ११ | ५२ |
| सुहृन्मित्रार्युदासीन० | ६ | ९ |
| स्थाने हृषीकेश तव | ११ | ३६ |
| स्थितप्रज्ञस्य का भाषा | २ | ५४ |
| स्पर्शान् कृत्वा बहिर्बाह्यान् | ५ | २७ |
| स्वधर्ममपि चावेक्ष्य | २ | ३१ |
| स्वभावजेन कौन्तेय | १८ | ६० |
| स्वयमेवाऽऽत्मना | १० | १५ |
| स्वे स्वे कर्मण्यभिरतः | १८ | ४५ |
| **ह.** | | |
| हतो वा प्राप्स्यसि | २ | ३७ |
| हन्त ते कथयिष्यामि | १० | १९ |
| हृषीकेशं तदा वाक्यम् | १ | २१ |